िदनाङ्कः - 01-11-2020

ात: - 06:55

मुख्यवार्ताः

- प्रधानमन्त्रिणा नरेन्द्रमोदिना अवादि यत् भारतं स्वसम्प्रभुताम् अखण्डताञ्च संरक्षयितुं वर्तते सर्वतोदृशा सन्नद्धम् ।
- प्रधानमन्त्रिणा मोदिना जनान् सशक्तीकरणार्थं न्यूनतम-प्रशासनम् अधिकतमं शासनम् इत्यावश्यकता सबलं प्रतिपादिता
- बिहारविधानसभानिर्वाचनस्य द्वितीयचाक्रिकमतदानाय प्रचाराभियानम् अनवरतं जवीयागत्या विधीयते
- कोविड नाइन्टीन् इति वैश्विक-सङ्क्रमणं विरुध्य सङ्घर्षे अनारतं साफल्यं अधिगम्यते । स्वास्थ्यलाभे परिष्कारमानाङ्कः प्रतिशतं त्रीणि चत्वारि दशमलवोत्तर एकनवतिमितो विवर्धितः
- इण्डियन् प्रीमियर् लीग इति स्पर्धामालिकायां ह्यः मुम्बई इण्डियन्स् इत्येतत् दलेन दिल्ली कैपिटल्स दलं नव क्रीडकानां सुरक्षापूर्वकं पराजितम् । अपरस्यां स्पर्धायां सनराइजर्स हैदराबाद इत्येतत् दलं रॉयल चैलन्जर्स इत्येतत् दलं पराजयत् । अद्यापि वर्तते स्पर्धाद्वयम् ।

अथ वार्ताः विस्तरेण

प्रधानमन्त्रिणा नरेन्द्र मोदिना गतवर्षे पुलवामा आतङ्क्याक्रमणम् आलक्ष्य विपक्षीय दलानां कार्यपद्धतिविषये टीकास्त्रं प्रक्षिप्तम् । तेन प्रोक्तं पुलवामायाम् अर्द्धसैनिकबलानां चत्वारिंशत् वीरभटाः यदा वीरगतिं प्राप्ताः तदा एतद्दलैः न खलु दुःखम् अनुभूतम् । प्रधानमन्त्री मोदी ह्यः गुजरातस्य केवडियायां स्टेच्यु ऑफ युनिटी परिसरे समायोजितं एकता दिवस समारोहं सम्बोधयता प्रोक्तवान् यत् यदा अहं अधिकारिणां पथसञ्चलनं पश्यन् आसम तदा मम मनसि दृश्यमेकं समुद्भूतं अपि च दृश्यमिदं पुलवामा आतङ्क्याक्रमणस्य आसीत् । तेन प्रोक्तं खलु एतत् विस्मर्तुं शक्यते यत् यदा अखिलमपि राष्ट्रं वीराणां वीरगतिं प्राप्ते सति शोकाकुलम् आसीत् तदा केचन जनाः अस्मिन् सम्मलिताः नैव आसन् अपितु एते पुलवामा आक्रमणेन स्वीय-स्वार्थं साधयन्तः आसन् इति । तदा विपक्षिदलानां वास्तविकं चरित्रं समेषां समक्षं दृग्गोचरितम् । श्रीमोदिना अन्ताराष्ट्रियः समुदायः आतङ्कवादं विरुध्य सम्भूय प्रतीकारार्थं प्रार्थितः । प्रधानमन्त्रिणा प्रोक्तं यत् विश्वस्य शान्त्यै सम्पन्नतायै च वैश्विकसमुदायस्य ऐक्यं वर्तते अतीव आवश्यकम् इति ।

प्रधानमन्त्रीनरेन्द्रमोदीलोकसेवायाः नागरिकसेवापरान् प्रशिक्षुधिकारिणः प्रार्थयत् यत् ते जनान् आत्मना युज्येयुः एवञ्च उत्तरदायिनो भवन्तु इति । स्टेच्यू ऑफ यूनिटी इत्यस्मात् स्थलात् दृश्यश्रव्य इति अन्तर्जालीयमाध्यमेन वार्ताक्रमे श्रीमोदिना अधिकारिणः प्रोदिताः यत् अस्माकं प्रशासनं वर्तते उत्तरदायी एवञ्च युवाधिकारिभिः सामान्यजनैः सह आत्मानं

योजनीयम् इति । तेन लोकसेवाधिकारिणः आत्मनिर्भरभारतम् इति लक्ष्यं प्रापयितुं लोकल फॉर वोकल इति स्वीकर्तुं आहूतम् । अस्मिन्नेव क्रमे प्रधानमन्त्रिणा मोदिना देशस्य प्रथमा सामुद्रिक-विमानसेवा प्रारब्धा । सेवेयं स्टेच्यू ऑफ यूनिटी स्थलं अहमदाबादे सामरमती रीवरफन्ट इति नदीतटं प्रति योजयति । इतः प्राक् श्रीमोदिना कोवडियायां स्टेच्यू ऑफ यूनिटी समया जलविमानस्थानकं समुद्घाटितम् अपि च केवडियातः अहमदाबादे साबरमती नदीं तटं प्रति सामुद्रिक-विमान-सेवा द्वारा यात्रा सम्पादिता इति ।

------

बिहार विधानसभानिर्वाचनस्य द्वितीय चाक्रिक मतदानाय नैर्वाचनिक प्रचारो वर्तते चरमावस्थायाम् । द्वितीय-चाक्रिक-मतदानाय प्रचारकार्यार्थम् अद्य वर्तते अन्तिमो दिवसः । अवधेयास्पदं तथ्यमिदं यत् राज्यस्य सप्तदश जनपदानां चतुर्नवति आसनेभ्यः नैर्वाचनिकप्रचारः अद्य अवसानं याति । विभिन्न दलानां नेतारः मतदातृन् स्वपक्षे सर्वात्मना प्रयतन्ते इति । अस्मिन् चरणे राज्यस्य उत्तरीय दिग्भागीय जनपदेषु निर्वाचनं अस्य मासस्य तृतीये दिनाङ्के सम्पादयिष्यते इति । निर्वाचन रणे त्रिषष्ट्यधिक-चतुःशतं प्रत्याशिनो वर्तन्ते ।

------

प्रशासनेन प्रोदीरितं यत् कोविड नाइन्टीन् इति वैश्विक सङ्क्रमणं विरुध्य कृतप्रयासः फलान्वितो जाजायते । साम्प्रतं यावत् कोरोना सङ्क्रमणात् प्रतिशतं त्रीणि चत्वारि दशमलवोत्तर एकनवतिमिताः जनाः रोगान्मुक्ताः इति । गत चतुर्विंशति होरायां ऊनषष्टिसहस्राधिकाः जनाः स्वास्थीभूताः । स्वास्थ्य-मन्त्रालयानुसारं देशे आहत्य द्वात्रिंशदुत्तर-चतुस्सप्तति-लक्षाधिकाः जनाः पूर्णतया स्वस्थीभूय सकुशलं गृहम् उपेताः इति । अधुना देशे द्व्याशीत्यधिक-पञ्चलक्षसङ्ख्याकानि सक्रिय प्रकरणानि वर्तन्ते इति । गत चतुर्विंशति होरासु अष्टचत्वारिंशत् सहस्रसङ्ख्याकानि नूतनप्रकरणानि दृष्टिपथे समायातानि । भारतीयायुर्विज्ञान-अनुसन्धान-परिषदा प्रायः एकादश कोटि सङ्क्रमण परीक्षणानि सम्पादितानि सन्ति इति ।

----

इण्डियन् प्रीमिय लीग इति स्पर्धामालिकायां ह्यः मुम्बई इण्डियन्स् इत्येतत् दलेन दिल्ली कैपिटल्स दलं नव क्रीडकानां सुरक्षापूर्वकं पराजितम् । अपरस्यां स्पर्धायां सनराइजर्स हैदराबाद इत्येतत् दलं रॉयल चैलन्जर्स इत्येतत् दलं पञ्चक्रीडकानां सुरक्षापूर्वकं पराजयत् । अद्य सार्धत्रिवादनात् चैन्नई सुपर किंग्स दलं किंग्स इलेनव पञ्जाब दलं च अन्तरा द्वन्द्वः । सायं सार्धसप्तवादने कोलकाता नाइट राइडर्स दलं राजस्थान रॉयल्स दलं सम्मुखीकरिष्यति इति ।